


तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

सचित्रमासपत्रिका

मे २०२१... रू.५/-

तिरुपतिस्थ

## श्रीगोविन्दराजस्वामिनः ब्रह्मोत्सवाः

२०२१ मे १८ तः २६ पर्यन्तम्

तिरुमलतिरुपतिदेवस्थानम्



# तिरुपतिस्थ श्रीगोविन्दराजस्वामिनः ब्रह्मोत्सवाः

२०२१ मे १८ तः २६ पर्यन्तम्

१८-०५-२०२१ भौमवासरः

प्रातः - ध्वजारोहणम्। रात्रौ - महाशेषवाहनम्।

१९-०५-२०२१ सौम्यवासरः

प्रातः - लघुशेषवाहनम्। रात्रौ - हंसवाहनम्।

२०-०५-२०२१ बृहस्पतिवासरः

प्रातः - सिंहवाहनम्। रात्रौ - मौक्तिकमण्टपवाहनम्।

२१-०५-२०२१ भृगुवासरः

प्रातः - कल्पवृक्षवाहनम्। रात्रौ - सर्वभूपालवाहनम्।

२२-०५-२०२१ मन्दवासरः

प्रातः - आन्दोलिकायां मोहिन्यवतारः। रात्रौ - गरुडसेवा।

२३-०५-२०२१ भानुवासरः

प्रातः - हनुमद्वाहनम्। रात्रौ - गजवाहनम्।

२४-०५-२०२१ इन्दुवासरः

प्रातः - सूर्यप्रभवाहनम्। रात्रौ - चन्द्रप्रभवाहनम्।

२५-०५-२०२१ भौमवासरः

प्रातः - रथोत्सवः। रात्रौ - अश्ववाहनम्।

२६-०५-२०२१ सौम्यवासरः

प्रातः - चक्रस्नानम्। रात्रौ - ध्वजावरोहणम्।



## गीतामृतम्

योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः।
धार्तराष्ट्रस्य दुर्बुद्धेः युद्धे प्रियचिकीर्षवः।।

(भगवद्गीता २३/१)

ये च धृतराष्ट्रपुत्रस्य दुर्योधनस्य पक्षतः युद्धं कर्तुम् अत्यन्तम् इच्छन्तः सन्तः जनाः अस्मिन् समये रणभूमिं प्रति समागताः तान् युद्धं करिष्यमाणान् अर्जुनोऽहं पश्यामि। अतः उभयोः सेनयोः मध्ये रथं स्थापय इति अर्जुनः श्रीकृष्णं प्रति वदति।

# सङ्कीर्तनम्




नन्दकधर नन्दगोपनन्दन
कन्दर्पजनक करुणात्मन् ।।नन्दकधर।।
मुकुन्दकेशवमुरहर
सकलाधिप परमेश्वर देवेश
शुकवरदसवितृसुधांशुलोचन
प्रकटविभव नमो परमात्मन् ।। नन्दकधर।।
ध्रुवपाश्चालीस्तुतिवत्सल
माधव मधुसूदन धरणिधर
भुवनत्रयपरिपोषण तत्पर
नवनीतप्रिय नादात्मन् ।।नन्दकधर।।
श्रीम (ा) न् वेङ्कटशिखरनिवास
महामहिम निखिलाण्डपते
कामितफलभोगप्रद ते नमो
स्वामिन् भूमन् सर्वात्मन् ।।नन्दकधर।।

(अन्नमाचार्यकृतसंस्कृतसङ्कीर्तनम्)

# सर्वरक्षणदक्षः श्री श्रीशकरुणाक्षः

सर्वेषु लोकेषु प्राणधारिणः समेऽपि अनियतदुःखैः परितपन्तः सन्तीति सर्वविदितविषयोऽयम्।

किन्तु समीपवर्तिनि काले अन्यैः प्रकृतिवैपरीत्येन वा समुत्पन्नः यः करोनानामकविषाणुः सः सर्वान् जरादुःखशोके मज्जयन् अस्ति। प्रायः एतस्य स्पर्शनेनैव अनारोग्यभूयिष्ठा भवेमेति स्वयं विज्ञाय भूयो भूयः प्रलपन्तः सन्तः जनाः अधिकोष्णसन्तप्ततृणा इव वायौ अन्तर्लीनाः भवन्ति इति दृष्टिगोचरायते। किञ्च यत्र गोमयगोमूत्रादिकं हरिद्रारङ्गवल्यादिकं उपयुज्यते तत्र कृमिकीटविषाण्वादीनां प्रवेशः न भवति इतीदं वाक्यं यदि सर्वैः स्मर्यते, तदाऽपि धैर्येण आपदं प्रतिरोद्धुं शक्नुमः।

भारतीयानां ध्येयवाक्येषु प्रमुखम् अन्यतमं वर्तते **वृक्षो रक्षति रक्षितः** इतीदम्। वृक्षस्य अयं मुख्यगुणः यत्, स्वयं विषवायुं (Carbon Dioxide) सङ्गृह्य समग्रान् असुविशिष्टान् प्रति प्राणवायुं (Oxygen) वितरति। वयं सर्वेऽपि जानीमः प्राणवायोः अभावे न जीवेम इति। किन्तु प्राणवायुपरिवेषकं वृक्षम् अरण्यं च नष्टप्रायं प्रत्यक्षेण परोक्षेण वा कल्पयामः।

किञ्च गोघृतादिना हवनेन च अधिकः प्राणवायुः उत्पद्यते इति ब्रुवन्ति वैज्ञानिकाः ऋषिमुनयश्च। अतः वृक्षवर्धनसंरक्षणादिना होमहवनादिना च प्राणरक्षकाः भवेम।

तथैव **तेन विना तृणमपि न चलति** इति शास्त्रज्ञवाक्याधारेण परमेश्वरस्य श्रीमहाविष्णोः अनुग्रहम् अनुज्ञां विना चराचरात्मकप्रपञ्चे यत्किञ्चिदपि कार्यं न प्रभवति इति ज्ञायते।

अतः **आर्ता विषण्णाः शिथिलाश्च भीताः**

**घोरेषु च व्याधिषु वर्तमानाः।**

**सङ्कीर्त्य नारायणशब्दमात्रं**

**विमुक्तदुःखाः सुखिनो भवन्ति।**

इत्युक्तदिशा आध्यात्मिकाधिदैविकाधिभौतिकदुखैः आर्ताः, विषण्णाः, शिथिलमनस्काः, भीताः, घोरेषु व्याधिषु वर्तमानाः वयं ''नारायण'' इति पौनःपुन्येन जप्त्वा पतितपावननारायणनामस्मरणेन श्रीशकृपादृष्टिवृष्टौ सञ्चाल्यमानाः तनु-मनः - शरीराणां दाढ्र्यं सम्पाद्य, धर्मपरिरक्षणे, प्राणिसंरक्षकत्राणे यत्किञ्चिद्बद्धदृष्टयः सन्तः ससन्तोषं जीवितुं सर्वरक्षणदक्षं श्रीनिवासमेवाश्रयामहे।

।।श्रीश्रीनिवासः परमा गतिर्नः।।

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*



# सप्तगिरिः


गौरवसम्पादकः-
डा.के.एस्.जवहर् रेड्डि I.A.S.,
कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
आचार्य के.राजगोपालन्, Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी
प्रकाशनमुद्रणविभागः, ति.ति.दे.,
मुद्रणालयः, तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.





तिरुमल-तिरुपतिदेवस्थानस्य सचित्रमासपत्रिका

सम्पुटिः-०८ सञ्चिका-०२

## मे २०२१

श्री प्लवनामसंवत्सरस्य चैत्रकृष्णपञ्चमीतः
प्लवनामसंवत्सरस्य वैशाखकृष्णपञ्चमी पर्यन्तम् - ११४१



| | |
|---|---|
| अक्षयतृतीया<br>- श्री वि.प्रदीपकुमारः | 06 |
| नृसिंहजयन्ती<br>- डा.मुरलीश्यामः | 08 |
| भगवद्गीता<br>- विद्वान् श्रीकान्ताचार्यः | 10 |
| नवधा भक्तिः<br>- डा.केशवप्रपन्न पाण्डेयः | 15 |
| हरिदासवङ्मये श्रीवेङ्कटाचलाधीशः<br>- डा.गङ्गिशेट्टि लक्ष्मीनारायणः | 17 |
| कर्मणा ख्यातिमाप्नोति<br>- कुमारी यदुश्री के.पि. | 19 |
| सार्थकजीवनाय किं कार्यम्<br>- श्री जोषि भारद्वाजः | 20 |
| रसप्रश्नाः | 22 |


मुखचित्रम् - गोविन्दराजस्वामिनः उत्सवमूर्तिः
अन्तिमरक्षापुटः - श्रीश्रीनिवासः अन्नमाचार्यश्च


## सङ्केतः
प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९,
२२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -
sapthagiri_helpdesk@tirumala.org



एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-

# अक्षयतृतीया



- श्री वि.प्रदीपकुमारः
चरवाणी - ९४९१६४६५३२

**म**त्स्यपुराणे पञ्चषष्ठितमाध्यायानुसारं ईश्वरः पार्वतीं प्रति सर्वकामप्रदम् अक्षयतृतीयाव्रतम् उद्दिश्य प्रोवाच। वैशाख शुद्धतृतीयायां क्रियमाणानां जप-तप-होमादीनां पुण्यकार्याणां फलम् अक्षयं भवति। यथा पुण्यकार्याणां फलम् अक्षयं भवति, तथैव पापकार्याचरणानां पापमपि अक्षयमेव भवति। अस्मिन् दिने तृतीयातिथिः ब्रह्मणा सह भवतीत्यतः अतिविशेषो वर्तते। दिनेऽस्मिन् निराहारेण क्रियमाणं किमपि वा कर्म तथा तत्संबद्धं फलं च अक्षयमेव लभते। अस्यां तिथौ ''अक्षय'' नामकः श्रीमहाविष्णुः पूज्यते। तस्मादेव एषा तिथिः अक्षयतृतीया इति कथ्यते। दिनेऽस्मिन् अक्षतोदकेन स्नात्वा, (तान्) अक्षतान् भगवतः विष्णोः पादकमलयोः संस्थाप्य, समाराध्य, तदनन्तरं तानक्षतान् ब्राह्मणेभ्यः दत्वा अवशिष्टान् दैवोच्छिष्टमिव, ब्राह्मणोच्छिष्टमिव मत्वा तान् प्रसादरूपेण यः स्वीकरोति तस्य अक्षयफलं लभ्यते इति भगवद्वचनम्। एवं यथाक्रमं वैशाखशुद्धतृतीयातिथौ समाराध्य, तदनु आगामिषु द्वादशमासेषु शुक्लपक्षस्य तृतीयातिथिषु उपवासेन यो विष्णुं समाश्रयति सः राजसूययागफलं लब्ध्वा मुक्तिं प्राप्य सुखी भवति। अक्षताश्च अभिन्ना अच्छिद्राः सत्वयुताः भवेयुः। ते च व्रीहिभिर्वा गोधूमैः वा यवलैर्वा निर्मिताः भवेयुः। तदेव अक्षताहारं वा अक्षतान्नं वा इति कथ्यते।

नारादपुराणेऽपि दिनेऽस्मिन् क्रियमाणानि कार्याणि अक्षयफलदानि इति प्रस्तूयन्ते। अद्यतने दानधर्मादीन्येव अक्षयफलदानि चेत् गङ्गानदीतीरे क्रियमाणानां कर्माणां किं फलमिति नारदमहर्षिणा एवमुक्तम् - अक्षयतृतीयादिने नियमेन घृत-धेनुदानं कृतस्य फलमधिकृत्य वक्तुं न शक्यते। सहस्रादित्यसमो भूत्वा, सर्वकामसमन्वितः, सुवर्णरत्नैः, चित्रहंसैः समन्विते विमाने पितृदेवैः सह कल्पकोटिकल्पानि, कल्पकोटीनां सहस्रकालं यावत् ब्रह्मलोके विराजते। पश्चात् गङ्गातीरे अत्यन्तं श्रीमान् ब्राह्मण इव जन्म लभते। अन्त्ये ब्रह्मज्ञानेन मुक्तिमपि प्राप्नोति। तथैव विधिवत् गोदानेन यावन्तः गोरोमाः भवन्ति तावन्ति वर्षाणि स्वर्गलोके विराजते। पश्चात् भूमौ जनिं प्राप्य उन्नतविद्या - ऐश्वर्यादीन् अनुभूय अन्त्ये मोक्षमाप्नोति। गङ्गानदीतीरे वेदविदे ब्राह्मणाय कपिलगोदानेन नरकस्थाः स्वकीयाः सर्वेऽपि पितरः स्वर्गमवाप्नुवन्ति। तत्र भूदानेन यावत् भूविस्तीर्णं भवति, तत्र विद्यमानानां रेणूनां प्रमाणाब्दपर्यन्तं ब्रह्म-विष्णु-शिवानां

लोके स्थित्वा, भूमौ जनिं प्राप्य सप्तद्वीपाधिपतिः भवति। यदि सः निद्राति तदा भेरी-शङ्खादीनां निनादेन उत्थापितो भवति। सर्वधर्मपरायणो भूत्वा सर्वविधसौख्यानि अनुभूय, नरके स्थितान् सर्वान् पितॄन् स्वर्गं प्रापयित्वा, स्वर्गस्थान् मोक्षं प्रापयित्वा, स्वयं ज्ञानी भूत्वा अविद्यां ज्ञानखड्गेन खण्डने समर्थः, विरागी भूत्वा परब्रह्म प्राप्नोति। एतादृशानि नैकानि फलानि प्रोक्तानि। अस्यां तिथौ षोडशमाषपरिमितं सुवर्णं यो विप्राय ददाति तस्य फलम् अक्षयं भवति।

अक्षेयतृतीयाविषये कतिपयवाक्येषु...

❁ नूतनवाहनक्रयणे उत गृहप्रवेशे, आभूषणीदीनां क्रयणे इत्यादिविषयेषु जनाः प्रायः एनां तिथिं उपयुज्यन्ते। विशेषस्तु एषा तिथिः सर्वेषां जीवने सौभग्यं तथा साफल्यं च आनयति। तस्मादेव अस्यां तिथौ पूर्वोक्तविषयेषु जनाः प्रभवन्ति।।

❁ अस्मिन् दिने एव प्रायः सर्वत्र सिंहाचलमन्त्रालयादिक्षेत्रेषु स्वामिनः दिव्यमङ्गलविग्रहाणां क्षेत्रमूर्तीनां तथा



गुरुराघवेन्द्रादिवृन्दावनानां च सम्पूर्णं गन्धलेपनं कुर्वन्ति इत्यपि विशेषः।

❁ भूमौ देवदेवः चतुर्विंशतिरूपाणि स्वीकृतवान्। एषु षष्ठः परशुरामः भवति। पुराणेषु परशुरामस्य जन्म अस्यां तिथौ बभूव इति ऐतिह्यम्।।

❁ अस्मिन् दिने भगवतः विष्णोः पादकमलयोः सकाशात् गङ्गा भुवं प्राप्ता। एवं कृत-त्रेत-द्वापरयुगानां प्रारम्भगणनाऽपि अस्मादेव प्रारभ्यते।।

❁ **न माधवसमो (वैशाख) मासो न कृतेन युगं समम्।**
**न च वेदसमं शास्त्रं न तीर्थं गङ्गया समम्।।**

एवं अक्षयतृतीयासमा अन्या तिथिः नास्ति इति ज्ञानवृद्धाः ब्रुवन्ति।

❁ अयं मुहूर्तः स्वकर्माणि सन्मार्गे उपस्थापितुं अत्यन्तोपकारको भवति इति कारणात् अन्यन्तं मान्यतां प्राप्नोति। यदि तिथिरेषा रविवासरे समायाति तर्हि सर्वाधिकशुभदायिनी तथा पुण्यकरी च भवति।।

❁ कलियुगस्य नकारात्मकचिन्तनायाः प्रभावात् (गोप्तुं) त्रातुं दिनेऽस्मिन् भगवतः विष्णोः उपासनापूर्वकं दानं अवश्यं करणीयम्। एवं कृते सति जन्मान्तरे अवश्यं समृद्धिम् ऐश्वयम् उत सुखं वा प्राप्नोति।।

❁ भविष्यपुराणानुसारं शाकलनामके नगरे एकः धर्मात्मा वणिङ्नामकः अक्षयतृतीयादिने सम्पूर्णश्रद्धया स्नान-दान तपादिकर्माचारी आसीत्। मरणानन्तरं पुण्यप्रभावादसौ द्वारकानगरे सर्वसुखसम्पन्नः राजा इव अवततार इति श्रूयते। ब्रह्मपुत्रस्य अक्षयकुमारस्य च प्रदुर्भावः अस्मिन्दिने एव अभवत्। अद्य श्वेतपुष्पैः देवस्य पूजनं कल्याणकरं भवतीति विश्वसन्ति जनाः।

# नृसिंहजयन्ती

- डा. मुरलीश्यामः
चरवाणी - ७९०७१८१९२३



सिंहस्य मुखम् मनुष्यशरीरः यत्र सः नरसिंहवतारः। यद्यपि अयं विष्णोः लीलावतारः। वर्षेऽस्मिन् मे मासे २५ दिनाङ्के नरसिंहजयन्ती वर्तते। प्रतिवर्षम् वैशाखमासे शुक्लपक्षे चतुर्दश्यां तिथौ जायमानः भवति। भगवान् नरसिंहः पराक्रमस्य देवः अस्ति। हिन्दूधार्मिकग्रन्थेषु भगवान् विष्णुः स्वभक्तानाम् उद्धाराय नरसिंहावातरेण दैत्यराजस्य हिरण्यकशिपोः वधम् अकारि। इदानीं पठेम तादृशनरसिंहावतारस्य अद्भुतकथाम्।

नरसिंहावतारः भगवतः विष्णोः प्रमुखावतारेषु अन्यतमः। नरसिंहवतारे भगवान् विष्णुः मानुषशरीरस्य सिंहमुखस्य च धारणम् अकरोत्। प्राचीनकाले कश्यपनामकऋषिः आसीत्। तस्य पत्न्याः नाम दितिः। तस्य पुत्रौ द्वौ स्तः। तत्र एकस्य नाम हिरण्याक्षः अपरस्य हिरण्यकशिपुः आसीत्। पृथिव्याः रक्षणार्थं हिरण्याक्षं भगवान् विष्णुः वराहरूपं धृत्वा मारितवान्। हरिण्यकशिपुः स्वभ्रातुः मरणस्य प्रतिशोधाय दशसहस्रवर्षाणि यावत् कठोरं तपः आचरितवान्। तदुक्तं मत्स्यपुराणे यथा -

**पुरा कृतयुगे विप्रा हिरण्यकशिपु प्रभुः।**
**दैत्यानामदिपुरुषश्चकार स महत्तपः।। १६१.२**

हिरण्यकशिपुः जलवासी स्नानमौनघृतव्रतम् आचरितवान् शमदमब्रह्मचर्यादिव्रतम् आचरितवान्। तस्य घोरतपसा नियमेन ब्रह्मा प्रीतो अभवत्। तदुक्तं मत्स्यपुराणे यथा -

**दशवर्षसहस्राणि दशवर्षशतानि च।**
**जलवासी समभवत् स्नानमौनघृतव्रतः।।१६१.३**
**ततः शमदमाभ्याञ्च ब्रह्मचर्येण चैव हि।**
**ब्रह्मा प्रीतोऽभवत्तस्य तपसा नियमेन च।।१६१.४**

तदा ब्रह्म तं वरं प्रार्थयितुम् अकथयत्। हिरण्यकशिपुः विशिष्टं वरं स्वीकरोति। यथा देवाः सुराः गन्धर्वाः यक्षाः उरगाः मानुषाः पिशाचाः मां न हन्युः। ऋषयः न शपेयुः, न अस्त्रेण शास्त्रेण मृत्युः भवेत्। गिरिणा पादपेन च मृत्युः भवेत्। अहनि रात्रौ वा मृत्युः न स्यात्। अपि च अग्रे इत्थमपि वदति अर्कः, सोमः, वायुः, हुताशनः, सलिलम्, अन्तरिक्षम्, नक्षत्राणि, क्रोधः, कामः, वरुणः, यमः, धनदः, धनाध्यक्षः, यक्षः इत्यादयः स्वयमेव भवेत्। इति तदुक्तं यथा मत्स्यपुराणे -

**न देवासुरगन्धर्वा न यक्षोरगरक्षसा।**
**न मानुषाः पिशाचा वा हन्युर्मां देव सत्तम!।।१६१.११**
**ऋषयो वा न मा शापैः शपेयुः प्रपितामह।**
**यदि मे भगवान्प्रीतो वर एष वृतो मया।।१६१.१२**
**न चास्त्रेण न शस्त्रेण गिरिणा पादपेन च।**
**न शुष्केण न चार्द्रेण न दिवा न निशाऽथवा।।१६१.१३**
**भवेयमहमेवार्कः सोमो वायुर्हुताशनः।**
**सलिलञ्चान्तरिक्षञ्च नक्षत्राणि दिशो दश।।१६१.१४**
**अहं कोधश्च कामश्च वरुणो वासवो यमः।**
**धनदश्च धनाध्यक्षो यक्षः किंपुरुषाधिपः।१६१.१५**

ब्रह्मणः वरदानेन सः स्वर्गे अधिकारं प्राप्तवान्। अस्य ताडनेन अष्टदिक्पालकाः लोकसंरक्षकाः पलायितवन्तः। देवताः निरुपायाः सञ्जाताः।

हिरण्यकशिपुं किमपि कर्तुं न शक्तवन्तः। तदा ते नारायणस्य प्रर्थनां कृतवन्तः। अस्मिन् एव समये पत्नी तस्य कयाधुः गर्भिणी सञ्जाता। नारयणस्य उपायेन नारदः तस्य पत्न्यै कयाधवे नारायणस्य गुणान् सङ्कीर्तनानि च बोधितवान्। गर्भस्थः शिशुः नारायणस्य भक्तः अभूत्। पूर्णगर्भा कयाधुः पुत्रमेकम् असूत। सः एव लोकविख्यातः प्रह्लादः। राक्षसानां दुर्गुणाः लवमात्राः तस्मिन् नासन्।

पित्रा कृतदोषान् सः विरोधयामास। शुक्राचार्यस्य गुरुकुले तम् अध्ययनाय प्रेषितवान्। सः इतरान् बालान् नारायणस्य गुणान् बोधितवान्। अपि च नारायणमन्त्रस्य माहात्म्यं कथितवान्। एतत् विज्ञाय हिरण्यकशिपुः नाना प्रकारकैः शिक्षयामास। अग्नौ अस्थापयत्। पर्वतात् अपातयत्। विषसर्पान् अप्रेषयत्। परन्तु सर्वव्यापिनः नारायणस्य माहात्म्यवशात् तस्य क्लेशलेशोपि नाभवत्।

एकदा हिरण्यकशिपुः स्वपुत्रं प्रह्लादम् आहूय स्वयमेव परिक्षितवान्। प्रह्लादः स्वभक्तौ निश्चलः सर्वेश्वरं नारायणम् एव परमं मन्यते स्म। बालहिरण्यकशिपुसंवादावसरे नारायणः कुत्र अस्ति इति प्रश्नं पृच्छति? तदानीम् बालः नम्रतया भक्त्या स्तंभे अपि अस्ति इति वदति। तदानीं क्रोधेन स्तम्भं ताडयति। स्तंभात् नरसिंहरूपधारी भगवान् बहिरागत्य हिरण्यकशिपुं संहरति। मत्स्यपुराणे प्रह्लादेन कृते नरसिंहस्तोत्रे एवं वर्णितम्।

नरसिंहरूपवर्णनम् -

**अव्यक्तप्रभवन्दिव्यं किमिदं रूपमागतम्।**
**दैत्यान्तकरणं घोरं संशतीव मनो मम।। १६२.५**
**अस्य देवाः शरीरस्थाः सागराः सरितश्च याः।**
**हिमवान्पारियात्रश्च ये चान्ये कुलपर्वताः।।१६२.६**
**चन्द्रमाश्च सनक्षत्रैरादित्यैर्वसुभिः सह।**
**धनदो वरुणश्चैव यमः शक्रः शचीपतिः।।१६२.७**
**मरुतो देवगन्धर्वा ऋषयश्च तपोधनाः।**
**नागा यक्षाः पिशाचाश्च राक्षसा भीमविक्रमाः।।१६२.८**
**ब्रह्मा देवः पशुपतिर्ललाटस्था भ्रमन्ति वै।**
**स्थावराणि च सर्वाणि जङ्गमानि तथैव च।।१६२.९**
**भवांश्च सहितोऽस्माभिः सर्वैर्देवगणैर्वृतः।**
**विमानशतसङ्कीर्णा तथैव भवतः सभा।। १६२.२०**
**सर्वं त्रिभुवनं राजन्! लोकधर्माश्च शाश्वताः।**
**दृश्यन्ते नारसिंहेऽस्मिंस्तथेदमखिलं जगत्।। १६२.११**

नरसिंहस्य शरीरे सागराः सरितश्च हिमवत्पर्वताः अन्ये कुलपर्वताः, ऋषयः, तपोधनाः, नागाः, यक्षाः, पिशाचाः, राक्षसाः, भीमविक्रमाः, ब्रह्मा, देवः, पशुपतिः ललाटस्थाः भ्रमन्ति स्थावरणि च सर्वाणि जङ्गमानि एतानि सर्वाणि दृश्यन्ते इति। नृसिंहः स्तंभात् बहिरागत्य तं स्वे ऊरुभागे निवेश्य तस्य शरीरम् स्वनखैः विच्छिद्य मारयति। तदानीं प्रह्लादः तं स्तुतिं कृत्वा प्रसन्नरूपम् प्रार्थयति। पश्चात् भगवान् नृसिंहः भयङ्करं रूपम् विहाय प्रसन्नतया आनन्देन दर्शनं अददात्। एषा एव नरसिंहजयन्ती कथा।

**सांस्कृतिकमहत्त्वम् -** अस्मिन् दिने गोधूलिमुहूर्ते नरसिंहस्य पूजा बहुशुभदा। गोधूलिमुहूर्ते एव नरसिंहावतारः अभवत्। अस्मिन् दिवसे प्रातः प्रभृति स्नानादि कृत्वा शुद्धं वस्त्रं धारयेत्। भगवतः लक्ष्मीनरसिंहस्य मूर्तौ चित्रे वा आचार्यमुखेन वेदमन्त्रादि द्वारा आवाहनम् कृत्वा फलानि पुष्पाणि कुङ्कुमम् केसरः नालिकेरम् अक्षताः वस्त्रम् गङ्गाजलम् पञ्चगव्यम् रक्षासूत्रम् दर्पणम् इत्यादीन् समर्प्य पूजां कुर्यात्। भगवतः नरसिंहमूर्तेः प्रसादप्राप्तये १०८ वारं जपं कुर्यात्। नरसिंहमन्त्रः एवम् अस्ति -

**ओं उग्रम् वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम्।**
**नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम्।।**
**ओं नृम नृम नृम नरसिंहाय नमः।।**

**भारते प्रसिद्धानि नरसिंहमन्दिराणि कानिचन -**

१. यदगिरिगुट्ट नरसिंहालयः तैलङ्गाण २. अहोबिलम् नरसिंहस्वामिदेवालयः आन्ध्रप्रदेशः ३. मेलुकोटे योगनरसिंहदेवालयः कर्नाटकम्, ४. सिंहचलम् नरसिंहालयः विशाखपत्तनम्,५. श्रीलक्ष्मीनरसिंहदेवालायः महाराष्ट्रः ६. भद्राचलनरसिंहालयः तैलङ्गाण, ७. नरसिंहस्वामिमन्दिरम् तमिलनाडु, ८. लक्ष्मीनरसिंहदेवालयः कण्णूर केरलम् ९. नरसिंग जी नरसिंहदेवालयः राजस्थानम्, १०. नरसिंग जरनी गुहादेवालयः कर्णाटकम्, ११. लक्ष्मीनरसिंहस्वामि देवालयः पेन्न अहोबिलम् १२. मङ्गलगिरि नरसिंहदेवालयः आन्ध्रप्रदेशः।





# भगवद्गीता

तेलुगुमूलम् -
श्री कुप्पा विश्वनाथशास्त्री,
संस्कृतानुवादः -
विद्वान् श्रीकान्ताचार्यः
चरवाणी - ६३६०६९३९९०

मर्त्याः 'तप' इत्युक्तौ शरीरिककष्टमपि सहन्ते, परन्तु दानं कर्तुं नेच्छन्ति। हस्ते रूप्यकाणि धरन्ति। तस्करः आगत्य त्वं धनं दास्यसि वा? ताडयामि वा? इति भर्त्सिते, मनुजः ताडनं स्वीकरोति परन्तु धनं तस्कराय न ददाति। तादृशी श्रद्धा धनस्योपरि भवति मनुष्यस्य। अतः ब्रह्मा मनुजस्वभावं लोभत्वं दृष्ट्वा 'दत्त' इति दानं कुर्वन्तु इति मानवेभ्यः उपदिष्टवान्। सर्वे मनुजाः तमुपदेशं ज्ञातवन्तः।

इतोऽपि दकारद्वयस्य गतिः का? इति चेत् एकं देवतानाम्, एकं राक्षसानाम्, अस्माकं न सम्बन्धः अस्ति। एकदकारेण अलम् इति मनुष्येषु केचन निर्णीतवन्तः। परन्तु केचन ऋषयः एकत्र मिलित्वा तादृश्यां ब्रह्मणा 'द द द' इति दकारत्रयोक्तौ सत्यां, वयम् एकदकारस्य अर्थं वदामः चेत् तत्कथं? त्रयस्यापि अर्थः वक्तव्यः खलु! यदि ब्रह्मा एकदकारः उपदेष्टव्य इति चिन्तिते सति, देवान् पृथक् आहुय 'द' इति वदति स्म। तथा राक्षसान् पृथक् आहूय 'द' इति उपदिशति स्म। नो चेत् त्रीन् आहूयापि किञ्चित् सभासौकर्यार्थं युगपत् 'द' इति वक्तव्यम्, परन्तु त्रिवारं किमर्थं उक्तवान्? तस्मिन् उपदेशे कोऽप्यपूर्वाभिप्रायः भवेत्। अयं उपदेशः न केवलं देवतानां राक्षसानां किन्तु मानवानामपि। किन्तु मनुजान् उद्दिश्यैव दकारत्रयमुपदिष्टमस्ति ब्रह्मणा। देवताभ्यः क उपदेशः राक्षसेभ्यश्च क उपदेश इति अस्माकमनावश्यकम्। महर्षयः इममेव विचारितवन्तः। वयं महर्षयः, मनुष्याः इत्यतः वः एव उपदेशं चकार चतुर्मुखः। किमिति चेत् ''दाम्यता'' यूयं अहङ्कारयुताः मा भवेयुः। ''दानानि'' सम्यक् कुर्युः आवश्यकतानुसारेणैव न तु सम्पूर्णतया। ''दयया'' जीवेयुः सर्वेषु। एतान् त्रीन् उपदेशान् ग्रहीतुं शक्नुमः यदा अस्मासु देवतानां, राक्षसानां, मनुष्याणां च लक्षणानि स्युः तदा। एवञ्च अस्मासु देवतास्वभावाः सद्गुणाः, सकारात्मकचिन्तनानि च सन्ति। तथैव अस्मासु राक्षसा अपि क्रूरस्वभावयुक्तत्वात् सन्ति। क्रूरस्वभावश्च राक्षसानामेव अधिकतया। तथैव नकारत्मकचिन्तनान्यपि वर्तन्ते।

किञ्च मानवसहजगुणास्तु सन्त्येव। अतः मानवेषु देवानां, राक्षसानां, मानवानां च गुणाः सन्ति। इतोऽपि निष्कृष्टतया वक्तव्यं चेत् केवलं पुण्यकर्मभ्यः देवतात्वेन, केवलं पापकर्मभ्यः राक्षसत्वेन (अत्युत्कटपापकर्मभ्यः इत्यर्थः), उभयविधकर्मभ्यः मनुष्यत्वेन जन्म आप्नुवन्ति। अत एव मनुष्येषु सर्वेऽपि गुणाः भवन्ति। श्रोतुं कठिनं चेदपि अभ्युपेयमेव। तेषां त्रयाणां गुणानां मध्ये युद्धे सति देवगुणानां विजये जागरूकतया, राक्षसगुणानां विजये सति अधिकजागरूकतया, मनुष्यगुणानां विजये सति ततोप्युपरिगन्तुं प्रयत्नः करणीय इति ब्रह्मोपदेशः। इमं सूक्ष्मं विचिन्त्यैव ऋषिमुनयः दत्रयस्य व्याख्यां चक्रुः प्रचारं च। तेषां परिचयोऽस्माकं विद्यत एव।

(अवशिष्टम् अग्रिमसञ्चिकायाम्)


अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमितविक्रमः।

# श्रीलक्ष्मीनृसिंहकरावलम्बनस्तोत्रम्

## (भावार्थयुतम्)

तेलुगु - डा॥ पमिडिकाल्व चेञ्चुसुब्बय्य
संस्कृतानुवादः - वि.प्रदीपकुमारः

श्लो॥ श्रीमत्पयोनिधिनिकेतन चक्रपाणे
भोगीन्द्रभोगमणिराजितपुण्यमूर्ते।
योगीश शाश्वत शरण्य भवाब्धिपोत
लक्ष्मीनृसिंह मम देहि करावलम्बम्॥१॥

श्रीकरपयोनिधिनिवास, हस्ते सुदर्शनचक्रधारिन्, पन्नगाशनशिरोविराजितमणिकान्तिपुञ्जशोभितमूर्ते, योगिनां प्रभो, शाश्वत, शरणार्थिनां आश्रय, भवसागरनौकारूप लक्ष्मीनृसिंह मम करावलम्बनं प्रदेहि।

श्लो॥ ब्रह्मेन्द्ररुद्रमरुदर्ककिरीटकोटि-
संघट्टिताङ्घ्रिकमलामलकान्तिकान्त।
लक्ष्मीलसत्कुचसरोरुहराजहंस
लक्ष्मीनृसिंह मम देहि करावलम्बम्॥२॥

चतुर्मुख-मघव-कपर्दि-मातरिश्वा-अर्यमादीनां किरीटकान्तिभिरुपशोभितनिर्मलकान्त्या शोभायमानवपुष्क, जलजाशोभनमानसजलाशयस्य कुसुमस्य राजहंस लक्ष्मीनृसिंह मम करावलम्बनं प्रदेहि।

श्लो॥ संसारसागरविशालकराळकाम-
नक्रग्रहग्रसननिग्रहविग्रहस्य।
मग्नस्य रागलसदूर्मिनिपीडितस्य
लक्ष्मीनृसिंह मम देहि करावलम्बम्॥३॥

हे लक्ष्मीनृसिंह! सांसारिकसागरे अतिभयङ्करेण कामाख्येन नक्रेणात्यौपसेविते, ऐहिकालोचनारूपतरङ्गैः आकुञ्चिते सति दुःखमनुभूयमानं मां करावलम्बनेन परित्राहि।

श्लो॥ संसारघोरगहने चरतो मुरारे
मारोग्रभीकरमृगप्रवरार्दितस्य।
आर्तस्य मत्सरनिदाघनिपीडितस्य
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥४॥

हे मुरारे, लक्ष्मीनृसिंह, संसाराख्ये भयानकविस्तृतारण्ये चरन्नहं मन्मथाख्यक्रूरमृगस्य मोहेन पीडितोऽस्मि, क्रोधाख्यग्रीष्मेण परिसन्तप्तोऽस्मि। तव करावलम्बेन मां रक्ष।

श्लो॥ संसारकूपमतिघोरमगाधमूलं
संप्राप्य दुःखशतसर्पसमाकुलस्य।
दीनस्य देव कृपया शरणागतस्य
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥५॥

हे लक्ष्मीनृसिंह अज्ञातमूले आगधे अतिभयङ्करे संसाराख्ये कूपे दुःखसर्पानां शतानां दंशनेन परिपीडितस्य शरणागतस्य दीनस्य मम तव करावलम्बनं प्रयच्छ।

श्लो॥ संसारभीकरकरीन्द्रकराभिघात-
निष्पीड्यमानवपुषस्सकलार्दितस्य।
प्राणप्रयाणभवभीतिसमाकुलस्य
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥६॥

हे लक्ष्मीनृसिंह! प्रमत्तेन करिणा तुण्डघातेन निस्सारीकृतदेहवतः, सर्वविधदुःखैः आलिङ्गितस्य, प्राणभयेनानुकम्पितस्य दीनस्य मम करावलम्बनं देहि।

श्लो।। संसारसर्पविषदुष्टभयोग्रतीव्र-
दंष्ट्राकराळविषदग्धविनष्टमूर्ते।
नागारिवाहन सुधाब्धिनिवास शौरे
लक्ष्मीनृसिंह मम देहि करावलम्बम् ।।७।।

संसाराख्यभुजङ्गस्य क्रूरभयङ्करदन्तस्थविषेण मम शरीरं नष्टप्रायं वर्तते। हे पवनाशनशत्रुवाहन, क्षीरसागरशयन, अद्वितीयपराक्रमशौरे हे लक्ष्मीनृसिंह मयि करुणया करावलम्बनं देहि।

श्लो।। संसारजालपतितस्य जगन्निवास
सर्वेन्द्रियार्थबडिशस्थझषात्मनश्च।
प्रोत्तंभितप्रचुरतालुकमस्तकस्य
लक्ष्मीनृसिंह मम देहि करावलम्बम् ।।८।।

हे जगन्निवास! संसाररूपजालगलितस्य सन्धिदेशे स्त्रीभोगादिलालसकण्टकसन्त्रस्तः सन् मत्स्यवत् दन्द्रम्यमाणस्य दयनीयस्थितिसङ्क्मिततात्वादिमतः मम तव कराश्रयं देहि।

श्लो।। संसारवृक्षमघबीजमनन्तकर्म-
शाखायुतं करणपत्रमनङ्गपुष्पम्।
आरुह्य दुःखजलधौ पतितो दयालो
लक्ष्मीनृसिंह मम देहि करावलम्बम् ।।९।।

पापख्यबीजेन प्राप्तजन्मा, अनन्तकर्माख्यशाखाभिः इन्द्रियाख्यपत्रैः मन्मथाख्यपुष्पैः संयुक्तः असौ संसारख्यः वृक्षः। तमारुह्य दुःखाब्धौ पतितोऽस्मि। हे दयासमुद्र! अघटितघटक! लक्ष्मीनुसिंह! तव करावलम्बनेन मां रक्ष।

श्लो।। संसारदावदहनाकुलभीकरोग्र-
ज्वालावलीभिरभिदग्धतनूरुहस्य।
त्वत्पादपद्मसरसीरुहमस्तकस्य
लक्ष्मीनृसिंह मम देहि करावलम्बम् ।।१०।।

संसार एव दावाग्निः। तेन व्यापृतः दग्धकेशः अहं ते पादकमलयोः मे शिरः नियोजितोऽस्मि। करुणया तमग्निं शान्तयित्वा तव करावलम्बनेन मां रक्ष नरसिंह!

श्लो।। संसारसागरनिमज्जनमुह्यमानं
दीनं विलोकय विभो करुणानिधे माम्।
प्रह्लादखेदपरिहार परावतार
लक्ष्मीनृसिंह मम देहि करावलम्बम् ।।११।।

हे प्रभो, दयानिधे, प्रह्लादस्य आर्तिहारिन्, अतिश्रेष्ठावतारिन्, संसारसागरे निमग्नं मूलमनुपलभमानं दीनं मां शरणागतं तव भक्तं करावलम्बनेन परिरक्षतात्।

श्लो।। संसारयूथगजसंहतिसिंह दंष्ट्रा
भीतस्य दुष्टमतिदैत्यभयङ्करेण।
प्राणप्रयाणभवभीतिनिवारणेन
लक्ष्मीनृसिंह मम देहि करावलम्बम् ।।१२।।

संसाराख्यगजसमूहं हिंस्यमानः सन् सिंहसदृश! हे लक्ष्मीनृसिंह दुष्टमतीनां राक्षसानां भयजननीभिः, जरामरणभयनिवारिणीभिः तव दंष्ट्राभिः मम करावलम्बं देहि।







श्लो।। संसारयोगिसकलेप्सितनित्यकर्म
संप्राप्य दुःखसकलेन्द्रिय मृत्युनाश।
संकल्प सिन्धुतनयाकुचकुङ्कुमाङ्क
लक्ष्मीनृसिंह मम देहि करावलम्बम् ।।१३।।

हे लक्ष्मीनृसिंह संसारबन्धैरुपजायमानानां सकलैहिकवाञ्छाभिरुत्पन्नानां नित्यानां कर्मबन्धानां सकाशात् प्राप्तानां इन्द्रियार्थानां जननमरणादीनां संहारे सत्यसंकल्पितयोगिन् मां तव करावलम्बेन अनुगृहाण।

श्लो।। बध्वा कलैर्यमभटा बहुभर्त्सयन्ति
कर्षन्ति यत्र पथि पाशशतैर्यदाऽहम्।
एकाकिनं परवशं चकितं दयालो
लक्ष्मीनृसिंह मम देहि करावलम्बम् ।।१४।।

दयामय, लक्ष्मीनृसिंह एकाकिनं परवशं चकितं तव भक्तं मां यदा यमभटाः पाशैर्बध्वा कर्षन्ति तदा आविर्भूय करावलम्बनेन त्राहि।

श्लो।। अन्धस्य मे हतविवेकमहाधनस्य
चौरैर्महाबलिभिरिन्द्रियनामधेयैः।
मोहान्धकारकुहरे विनिपातितस्य
लक्ष्मीनृसिंह मम देहि करावलम्बम् ।।१५।।

कामादिभिः अन्धप्राय इति हेतोः महदङ्गबलैरिन्द्रियाणि मम विवेकधनं हृत्वा मां अज्ञानान्धकारे विनिपातितानि। अतः मां करावलम्बनेन परिरक्ष नृसिंह।

श्लो।। लक्ष्मीपते कमलनाभ सुरेश विष्णो
यज्ञेश यज्ञ मधुसूधन विश्वरूप।
ब्रह्मण्य केशव जनार्दन वासुदेव
लक्ष्मीनृसिंह मम देहि करावलम्बम् ।।१६।।

लक्ष्मीवल्लभ! वारिजनाभ! देवाधिदेव! सर्वव्यापक! यज्ञपुरुष! यज्ञरूप! मधुसूदन! विश्वरूप! ब्राह्मणक्रियारूप! केशव! जनार्दन! वासुदेव! लक्ष्मीनृसिंह मम करावलम्बनं देहि।

श्लो।। प्रह्लादनारदपराशरपुण्डरीक-
व्यासाम्बरीशशुकशौनकहृन्निवास।
भक्तानुरक्तपरिपालनपारिजात
लक्ष्मीनृसिंह मम देहि करावलम्बम् ।।१७।।

प्रह्लाद-नारद-पराशर-पुण्डरीक-व्यास-अम्बरीश-शुक-शौनकादीनां परमभागवतोत्तमानां हृदयनिवासिन्, प्रीत्यास्पदानां भक्तानां रक्षणे कल्पवृक्षसदृश हे लक्ष्मीनरसिंह तव करावलम्बनेन मां रक्ष।

श्लो।। एकेन चक्रमपरेण करेण शङ्ख-
मन्येन सिन्धुतनयामवलम्ब्य तिष्ठन्।
वामेतरेण वरदाभयहस्तमुद्रं
लक्ष्मीनृसिंह मम देहि करावलम्बम् ।।१८।।

हे लक्ष्मीनृसिंह एकेन दक्षिणहस्तेन चक्रम् अन्येन दक्षिणहस्तेन अभयवरप्रदानमुद्रां, एकेन वामहस्तेन शङ्खं तथा अन्येन वामहस्तेन सिन्धुतनयां लक्ष्मीम् अवलम्ब्य मां करावलम्बनेन गोपाय।

श्लो।। आद्यन्तशून्यमजमव्ययमप्रमेयम्
आदित्यरुद्रनिगमादिनुतप्रभावम्।
त्वाम्बोधिजास्यमधुलोलुपमत्तभृङ्गं
लक्ष्मीनृसिंह मम देहि करावलम्बम् ।।१९।।

आद्यन्तशून्य, जननाभवात् अज इति ख्यात, नाशाभावात् अव्यय इति प्रसिद्ध, देशकालादिभिः परिगणयितुमशक्य, अप्रमेय, सूर्य-रुद्र-वेदादिभिः स्तुत्यस्वरूप, पयोजामुखाम्भोजमधुरास्वादने समर्थ, राजभृङ्ग हे लक्ष्मीनृसिंह मम करावलम्बनं प्रयच्छ।

**श्रीशङ्करभगवत्पादैः रचितं श्रीलक्ष्मीनृसिंहकरावलम्बनस्तोत्रम्। श्रीनृसिंहजयन्तीसन्दर्भे सप्तगिरिपाठकानाम् अनुकूलाय। ये च प्रत्यहं सायञ्च भक्त्या पठनं पारायणं कुर्वन्ति, ते कष्टनष्टादिदूराः सुखसौभाग्यशालिनोऽपि भवन्ति।**

# तिरुमलतिरुपतिदेवस्थानम्



श्लो।। वाराह राम नरसिंह रमादिकान्त
क्रीडाविलोल विधिशूलिसुरप्रवन्द्य।
हंसात्मकं परमहंसविहारलील
लक्ष्मीनृसिंह मम देहि करावलम्बम् ।।२०।।

परमहंसभूतेषु योगिषु विहारशील लक्ष्मीनृसिंह भवान् वराह-नृसिंह-रामादिरूपान् स्वीकृतोऽस्ति। लक्ष्म्यादिभिः स्त्रीभिः क्रीडितोऽस्ति। ब्रह्म-रुद्रादिदेवताभिः वन्द्यः। अतः हंसस्वरूपेण तव करावलम्बनेन मां परिरक्षतु।

श्लो।। माता नृसिंहश्च पिता नृसिंहः
भ्राता नृसिंहश्च सखा नृसिंहः।
विद्या नृसिंहो द्रविणं नृसिंहः
स्वामी नृसिंहः सकलं नृसिंहः ।।२१।।

मम माता-पिता-भ्राता-सखा-विद्या-सम्पत्-रक्षकश्च इत्यादिरूपेण सर्वं नृसिंह एव।

श्लो।। प्रह्लादमानससरोजविहारभृङ्ग
गङ्गातरङ्गधवलाङ्गरमास्थिताङ्ग।
शृङ्गारसंगरकिरीटलसद्वराङ्ग
लक्ष्मीनृसिंह मम देहि करावलम्बम् ।।२२।।

प्रह्लादस्य मनोनाम्नि सरोवरस्थपद्मे विहरोत्सुकमधुहारिन्, गङ्गातरङ्गा इव श्वेतवर्ण, शुभ्रस्वरूप, लक्ष्म्याः निवासस्थानभूत, शोभनशरीराङ्ग, सुन्दरकिरीटेन प्रकाशमानशिरस्क, हे लक्ष्मीनृसिह! मम करावलम्बनं प्रसीद।

श्लो।। श्रीशङ्कराचार्यरचितं सततं मनुष्यः
स्तोत्रं पठेदिह तु सर्वगुणप्रसन्नम्।
सद्यो विमुक्तकलुषो मुनिवर्यगण्यो
लक्ष्मीपतेः पदमपैति स निर्मलात्मा।।२३।।

श्रीशङ्कराचार्यैर्विरचितं दिव्यमहिमान्वितं स्तोत्रमिदं यो नरः पठति स सर्वपापैः विमुक्तो भूत्वा मुनीश्वरैः संस्तुतः सन् निर्मलात्मा भूत्वा पुनरावृत्तिहीनं विष्णुस्थानम् अवाप्नोति।

श्लो।। एतन्मयार्जितवपुः प्रचुरप्रवाह-
मग्नार्तमर्त्यनिवहस्य करावलम्बम्।
लक्ष्मीनृसिंहचरणाब्जमधुव्रतेन
स्तोत्रं कृतं शुभकरं भुवि शङ्करेण ।।२४।।

सकर्मबन्धे संसारेऽस्मिन् पतित्वा क्लेशमनुभूयमानां मानवानां साहायकं शुभतमं शुभकरञ्च एतत्स्तोत्रं लक्ष्मीनृसिंहस्य पदपद्मयोः समासक्तेन शङ्कराचार्येण कीर्तितम्।

श्लो।। श्रीमन्नृसिंहविभवे गरुडध्वजाय
तापत्रयोपशमनाय भवौषधाय।
तृष्णादिवृश्चिकजलाग्निभुजङ्गरोग-
क्लेशव्ययाय हरये गुरवे नमस्ते ।।२५।।

गरुडध्वजः, तापत्रयनिवारकः, संसारनिवारणे औषधः, अशानादीनां नाशकः, वृश्चिक-जल-अग्नि-सर्प-व्याधीत्यादिभिः जायमानबाधोपशमकारकः, सकलपापहर्ता मम गुरुः यः लक्ष्मीनृसिंहः तस्मै हरये नमो नमः।





# नवधा भक्तिः

- डा.केशवप्रपन्न पाण्डेयः
चरवाणी - ८१२४९७०३१६

**स्मरणम्** - तिलतैलवदविच्छिन्नस्मृतिः भक्तेः लक्षणत्वेन प्रायेणोच्यते। अतो निरन्तरं निर्मलान्तःकरणेन भगवतो नारायणस्य पञ्चावस्थानामनुभवपूर्वकं लीलानुगुणं सदा तन्नाम्ना पुलकितगात्रः सन् स्मरणमनवरतञ्च तच्चरणारविन्दयोरनवधिका प्रीतिः स्मरणात्मिका भक्तिरिति प्रोक्ता।

यथा भक्तप्रह्लादः भक्तिपथि स्थितः बहुविधाभिः समस्याभिः संपीडितोऽपि भगवति विष्णौ अनुस्यूतया स्मृत्या स्वभक्तिं प्रकटीकरोति। यथा

स त्वासक्तमतिः कृष्णे दृश्यमानो महोरगैः।
न विवेदात्मनो गात्रं तत्स्मृत्याह्लादसंस्थितः॥

अतः प्रह्लादः अस्याः भक्त्याः दृष्टान्तः भवति। स्मृतिरूपाया अस्याः भक्तेः वैभवं प्रदर्शयन्तौ द्वाविमौ श्लोकौ अत्यन्तं प्रसिद्धौ।

स्थिते मनसि सुस्वस्थे शरीरे सति यो नरः।
धातुसाम्ये स्थिते स्मर्ता विश्वरूपञ्च मामज॥
ततस्तं म्रियमाणं तु काष्ठपाषाणसन्निभम्।
अहं स्मरामि मद्भक्तं नयामि परमं पदम्॥

इति मातरं धरणीं प्रति भक्तवत्सलस्य वराहस्य वचनम्। स्मरणशीलं वा अथवा यथा तथा वापि स्मरणमात्रेणैव स्वभक्तं देहावसाने स्वयं भगवान् तं स्मृत्वा स्वधाम नयतीत्यर्थः स्पष्टः।

**पादसेवनम्** - घोरादिह संसारसागरात् आत्मानं मोचयितुं भगवच्चरणारविन्दे एव तारके। अतो भक्तिप्रपत्तिभ्यां भगवतश्चरणारविन्दे एवाश्रयणीये इति आचार्या उपदिशन्ति।

**यथा जितन्ता स्तोत्रे -**

संसारसागरं घोरमनन्तक्लेशभाजनम्।
त्वामेव शरणं प्राप्य निस्तरन्ति मनीषिणः॥

परिशुद्धेन मनसा भगवतः पादसेवनमेव ऐहिकं सुखमपि प्रदाय पारलौकिकीं परां गतिमपि ददातीति अनेकत्र प्रमाणानि प्रसिद्धानि। एतस्याः भक्त्याः स्वयं **भगवती लक्ष्मीः** उदाहरणत्वेननोक्ता या नित्यं भगवतोऽनपायिनी सती नित्यं क्षीराब्धौ भगवत्पादारविन्दयोः संवाहयन्ती मोक्षमिच्छतः जीवात्मनः निर्दिशति करुणया यदनयोः चरणारविन्दयोः सेवयैव भगवत्प्राप्तिरिति।

**अर्चनम्** - मनसा वाचा कर्मणा चानन्यभावेन शास्त्रोक्ताभिः भगवदनुष्ठानयोग्याभिः समाग्रीभिः तच्चरणारविन्दयोरर्चनमेव अर्चनात्मिका भक्तिरित्याख्याता। आगमोक्तप्रकारैः सुगन्धजनकैः बहुविधैः पुष्पैः भगवत्प्रीतिकारकैः वेदादिमन्त्रैः, अर्घ्यपाद्यैश्च तत्पादारविन्दपूजनं एतस्याः उत्तरोत्तराङ्गानि भवन्ति। श्रीमद्भागवते **पृथुमहाराजोऽस्याः** भक्त्याः दृष्टान्तो भवति। स्वपराक्रमेण ऋषीणामनुग्रहेण च दुर्भिक्षग्रसितं स्वराज्यं सुभिक्षं चकार, ततो महान्तमेकं यज्ञमनुष्ठाय भगवन्तं

सन्तोषयामास। तद्भक्त्या सन्तुष्टं भगवन्तं प्रत्यक्षीकृत्य बहुधा अर्चयति स्म। यथा तेषु किञ्चन पद्यम् -

**न कामये नाथ तदप्यहं क्वचित् न यत्र युष्मच्चरणाम्बुजासवः।**
**महत्तमान्तर्हृदयान्मुखच्युतो विधत्स्व कर्णायुतमेष मे वरः।।**

इति।

**वन्दनम् - वदि अभिवादनस्तुत्योः** इत्यनेन प्रधानेन स्तुत्यर्थे शब्दोऽयं प्रयुज्यते। अतः स्तुतिप्रधानायाः अस्याः भक्त्याः **अक्रूरः** दृष्टन्तत्वेनोक्तः। श्रीमद्भागवतेऽक्रूरस्य कथा लभ्यते, पुराणेष्वपि अनेकत्र अक्रूरस्य माहात्म्यं प्रदर्शितं, यथापरत्र **तीर्थराजं हि चाक्रूरं गुह्यानां गुह्यमुत्तमम्** इति। भगवतः कृष्णस्यात्यन्तप्रियोऽयं व्रजतो कृष्णबलरामौ मथुरां प्रति नयनसमये मध्येमार्गं भगवतः दिव्यस्वरूपं ददर्श तत्र तेन कृता स्तुत्यात्मिका भक्तिः श्लोकेऽत्र स्पष्टा गार्गसंहितायां मथुराखण्डे यथा -

**देवकीसुतगोविन्द वासुदेव जगत्पते यदूत्तम जगन्नाथ पाहि मां पुरुषोत्तम।**
**वाणी सदा ते गुणवर्णने स्यात् कर्णौ कथायां मम दोश्च कर्मणि।।**

तत्र तदीयानां भक्तानां विषयेऽपि समानो विशेषादरभावो वाचा प्रदर्शनीय इत्यपि आचार्याणामाशयः।

**दास्यम् - दासभूताः स्वतः सर्वे ह्यात्मानः परमात्मनः** इत्यनेन यद्यपि सर्वेषामप्यात्मनां भगवद्दास्यं स्वाभाविकं, परं तदनुभूतिस्तु भगवत्कृपया केषाञ्चनैव तद्भक्त्या जायते। स्तोत्ररत्ने सर्वेष्वपि जन्मसु भगवद्दास्यं कामयमानस्य भक्तस्योक्तिः यथा -

**तव दास्य सुखैकसङ्गिनां भवनेष्वस्त्वपि कीटजन्म मे।**
**इतरावसथेषु मास्म भूत् अपि मे जन्मचतुर्मुखात्मना।।**

इत्यनेन पद्येन भगवद्दास्येन जायमानायाः अप्रतिमायाः सुखानुभूत्याः वैशिष्ट्यं प्रतिपादितम्। भगवद्दास्यरहितेषु भवनेषु चतुर्मुखात्मना जन्मापि तुच्छमिह भावितम्। तादृश्याः भक्तेरस्याः भक्ताग्रेसरो **हनूमान्** दृष्टान्त इति प्रोक्तः। यस्य भगवति रामे सर्वतो दास्यभक्तिरनुपमेयानिर्वचनीया च।

**सख्यम्** -ईश्वरमेव स्वमित्रत्वेन संभाव्य स्वसर्वस्वार्पणपूर्वकमनन्यभावेन तच्चरणारविन्दयोः शरणागतिः सख्यात्मिका भक्तिरित्याहुः। तादृशं मित्रभावेन संप्राप्तं शरणागतं न जातु त्यजेयमिति भगवतो रामस्यैव वचनमिह प्रमाणम्

**मित्रभावेन संप्राप्तं न त्यजेयं कथञ्चन।**
**दोषो यद्यपि तस्य स्यात्सतामेतदगर्हितम्।।**

तत्रैवापरत्र हनूमता सुग्रीवं प्रति -

**तेन मैत्री भवतु ते यदि जीवितुमिच्छसि।**
**धर्मज्ञोऽसौ जगत्ख्यातः शरणागतवत्सलः।।**

इत्यादिभिः भगवतश्चरणारविन्दयोः निष्कपटभावेनायातस्य मित्रस्यावश्यरक्षणीयत्वं निश्चितम्। अर्जुनविभीषणसुग्रीवादयो भगवत्सखाः सख्यात्मिकायाः भक्त्याः अन्याः उदाहरणभूताः भवन्ति। अत्र मुख्यत्वेन अर्जुनः दृष्टन्तत्वेनोक्तः।

**आत्मनिवेदनम् -** आत्मनः सर्वतोभावेन भगवति न्यास एवात्मनिवेदनात्मिका भक्तिरित्युक्ता। न्यासदशके देशिकाचार्यैः स्पष्टञ्च। यथा -

**अहं मद्रक्षणभरः मद्रक्षणफलं तथा।**
**न मम श्रीपतेरेवेत्यात्मानं निक्षिपेद्बुधः।।**

**बलिमहाराजो** भक्त्याः अस्या दृष्टान्तो भवति। वामनावतारे याचकत्वेनायातेन ब्राह्मणवटुरूपधारिणा भगवता वामनेन याचितां त्रिपदपरिमितां भूमिं सङ्कल्पपूर्वकं प्रदाय ततोऽन्तिमे भगवतः तृतीयेन पदेनात्मानम् आत्मसात्कर्तुं भगवन्तं संप्रार्थ्य निरहङ्कारोऽनन्यभावेनात्मानं निवेदयति बलिमहाराजः।

एतादृशेन मार्गेण आकरत्रयसंपन्नो भक्तः आत्मानं भगवति निवेद्य सर्वविधैः लौकिकदुःखैः विमुक्तो भवति। एवमुपर्यक्ताभिः नवविधाभिः भक्तिभिः शरणागतो भक्ताः भक्तितत्त्वं परिज्ञाय ताभिः भक्तिभिः भगवन्तं नारायणं प्रतुष्य ऐहिकात्यन्तिकदुःखनिवृत्तिपूर्वकं पारलौकिकं परमानन्दैकनिलयं परमपदं प्राप्य तत्रैव तेनैव वैकुण्टनाथेन भगवता नारायणेन सह नित्यं तत्सारूप्यसायुज्यसामीप्यादिवैभवानवाप्य सदा नन्दतीति एतादृशीनां भक्तीनां फलश्रुतिरुक्ता।

# हरिदासवाङ्मये
# श्रीवेङ्कटाचलाधीशः


तेलुगुमूलम् - सुस्वरं नागराजाचार्युलु

संस्कृतानुवादः - डा.गङ्गिशेट्टि लक्ष्मीनारायणः

चरवाणी - ९४९४२४८३४८




पुरन्दरदासवर्याः भगवतः श्रीनिवासस्य अनुग्रहेण जनिम् अलभन्त। अतः श्रीनिवासस्य परिपूर्णानुग्रहेण परिपूर्णभक्त्या पुरन्दरदासवर्याः वेङ्कटाचलाधीशस्य श्रीनिवासस्य दर्शनं यथावकाशं कुर्वन्ति स्म। यदा पुरन्दरदासवर्याः कारणान्तरैः ग्रामन्तरेषु भवन्ति तदा भगवतः दर्शने होराः दिनानि यावत् विलम्बः भवति चेत् विरहबाधया खिन्नाः भवन्ति स्म। यदा स्वामिनः दर्शनं भवति तदैव तस्य कृते वास्तविकः आनन्दः भवति। दर्शने यदि महान् विलम्बः भवति चेत् बहुसन्तप्ताः भवन्ति।

एकस्मिन् सन्दर्भे भगवतः दर्शनार्थं परितप्यमानाः - भक्तजनान् उद्दिश्य एवम् उक्तवन्तः -

**ई जीवविद्दु फलवेनु । चेलुव**
**राजीवलोचन नेनेयद (नोडद) पापितनुविनलि**

(यः पापी कमलदलायिताक्षिणं वेङ्कटेश्वरं न पश्यति, तस्य शरीरे प्राणः भवति चेदपि किं वा प्रयोजनम्।)

**उरगाद्रियलि चन्द्रपुष्करणि मोदलाद**
**परिपरि तीर्थदलि मुणुगि मुणुगि**
**तिरुवेंगळप्पसिरि पुरंदरविठलन कण्णिनलिनोड**
**लरियद पापिकपटतनुविनलि।।**

उरगाद्रिसंस्थिते पुष्करिणीतीर्थादि तीर्थेषु यदि स्नानं न कृत्वा तत्रस्थं तिरुवेङ्कटीचलाधीशं पुरन्दरविठलं नेत्राभ्यां न पश्यति चेत् शरीरे प्राणः भवति चेदपि किं प्रयोजनम्।

पुरन्दरदासवर्याः भगवतः श्रीनिवासस्य दर्शनं न भवति चेद् यावत् सन्तप्ताः भवन्ति, स्वामिनः दर्शनं भवति चेत् तावत् सन्तोषेण कूर्दनं कुर्वन्ति। यथा -

**निन्ननोडि धन्यनादेनो हे श्रीनिवास।।**
**निन्ननोडि धन्यनादे एन्नमनो नयनकीग**
**इन्नु दयमाडु सुप्रसन्न स्वामि श्रीनिवास।।**

हे श्रीनिवास! मनसा नेत्राभ्यां (मनोनेत्राभ्यां) त्वां दृष्ट्वा अहं धन्यः सञ्जातः। मां दयया रक्षस्व।

**पक्षिवाहन लक्ष्मीरमण लक्ष्मि निन्न पक्षदल्लि**
**रक्षक शिक्षक दक्ष पाण्डवपक्ष कम-**
**लाक्ष रक्षिसु करुणिसु।।**

हे पक्षिवाहन! लक्ष्मीपते! अहं तव वक्षस्थले भगवतीं लक्ष्मीम् अपश्यम्। हे स्वामिन् त्वं रक्षकः शिक्षकः दक्षः पाण्डवपक्षपाती कमलायिताक्षश्च भवसि, कृपया करुणया माम् अनुगृहाण।।

**देशदेश तिरुगिना आशेबद्धनादे स्वामि**
**दासनल्लवेनो जगदीश। श्रीश श्रीनिवास।।**

हे श्रीनिवास! देशदेशान् अटित्वा अहम् आशाबद्धोऽ भवम्। हे स्वामिन् अहं तव दासोऽस्मि। हे जगदीश! मां रक्षस्व।

**कंतु जनक केळु एन्न अंतरंगद आसेयन्नु**
**अंतरविल्लदे पालिसय्य। श्रीकांत श्रीनिवास पुरंदर विठल।।**

मन्मथजनक! पुरन्दरविठल! मम अन्तरङ्गप्रार्थनां श्रुत्वा शीघ्रं माम् अनुगृहाण।

**स्नेहो भक्तिरिति प्रोक्तः** इत्युक्तप्रकारेण ज्ञानपूर्वकस्नेहः एव भक्तिरिति मध्वाचार्याणां सिद्धान्तमनुसृत्य भगवन्तं श्रीनिवासं सख्यभक्त्या व्याजनिन्दास्तुतिमेवंप्रकारेण पुरन्दरदासवर्याः कृतवन्तः।

**तिरिदुंबदास कैलि कप्पवगोंबे**
**गरुड गमन निन्नि चरियनरियें।**
**दोरे पुरंदरविटल निन्नन्नु नंबिदरे**
**तिरुपेयु हुट्टलोल्लिदु केळोहरिये**
**आरुबदुकिदरय्य हरिनिन्न नंबि**
**तोरो ईजगदोळगे ओब्बरनुकाणे।।**

सर्वसङ्गपरित्यागिनः त्वमेव सर्वस्वमिति सम्भावयन्तः जनाः भिक्षारूपेण प्राप्तोपहारान् तव कृते समर्पयन्ति चेत् तान् स्वीकरोति। यदि एकेन वाक्येन वक्तव्यं चेद् ये च अनुगृह्णन्ति तेषां सम्पत्तिं हरिष्यति।

**यस्यानुग्रहमिच्छामि तस्य वित्तं हराम्यहम्** इत्यतः त्वां विश्वास्य जिवितः कोऽपि नास्ति। उदारहणार्थं ताम्रध्वजस्य पुत्रं, भृगुमुनिं, त्रिपुरासुरस्य पत्नीः, कर्णं, कौरवान्, पूतनां च कथम् अनुगृहीतवान् इति सर्वे जानन्ति एव।

**दणियनोडिदेनो वेंकटन। मन**
**दणियनोडिदेनु। शिखामणि तिरुमलन।।**

श्रीमन्तं वेङ्कटेश्वरं मनसा अपश्यम्। सः श्रीनिवासः तिरुमलशिखामणिः। चरणयोः नूपुरे धृतवान्। पीताम्बरं धृत्वा तस्य उपरि मेखलां धृतवान्। स्वर्णपदकैः विद्योतमानां मालिकां धृतवान्। कण्ठे वैजयन्तीमालां धृतवान्। अङ्गुलीषु अङ्गुलीयकानि धृतवान्। भुजकीर्तिधरः नवपद्मपत्रनयनश्च। अङ्गुलीयककेशान् धृत्वा मन्दस्मितः। शङ्खचक्रौ धृतवान्। कङ्कणे हस्तयोः धृतवान्। शङ्खध्वनिं करोति। भूलोकवैकुण्ठ एतदेव इति हस्तेन दर्शयति। कठिनतण्डुलैः कृतं नैवेद्यं स्वीकरोति। वाद्यनादैः आनन्दमनुभवति। सुगन्धकस्तूरीलेपनं करोति। पीतम्बरधरः आखेटं कृत्वा आगच्छति। अहम् एतादृशं सृष्टीशं भगवन्तं श्रीनिवासमपश्यम्।

पुरन्दरदासवर्येभ्यः अन्तः बहिश्च श्रीनिवासः एव। नेत्रनिमीलने उन्मीलने च भगवतः श्रीनिवासस्य दिव्यमङ्गलविग्रहः एव भवति। स्वामिनः वेङ्कटेश्वरस्य दर्शनेन पुलकितगात्रः पुरन्दरदासवर्यः झटिति उत्थाय तत्रस्थान् भगवतः सौन्दर्यं वर्णयति स्म।

**कनसु कंडेने मनदल्लि कळवळ गोंडेने।**
**एनु हेळलि तंगि तिम्मय्यन पादवनु कंडे।।**

मम स्वप्ने मनसा श्रीनिवासस्य कलाः ज्ञातवान्।
कियदिति वदामि, तस्य श्रीनिवासस्य पादौ दृष्टवान् इति भगवतः आपादमस्तकमङ्गलसौन्दर्यालङ्कारविग्रहः अस्यां कृतौ पुरन्दरदासवर्येण वर्णितम्।

न केवलम् एकवारं, बहुवारं भगवतः दिव्यमङ्गलमूर्तिं दृष्टवन्तः पुरन्दरदासवर्याः **कंडेना कनसिनलिगोविंदन** इति उपर्युक्तभावमेव वर्णितवन्तः। इतोपि श्रीनिवासं वात्सल्येन यथा पिता वा माता वा पुत्रं आह्वयति तथा आह्वयति। यथा गोकुले भक्तिपारवश्येन यशोदा बालकृष्णम् आह्वयति तथा भक्तिपारवश्येन **ओडि बारय्य वेङ्कटपति निन्न नोडुवे मनदणिय** हे वेङ्कटपते धावित्वा आगच्छ। पुरा श्रीकृष्णरूपेण यथा नूपुरे धृत्वा नृत्यं कृतवान् तथा नृत्यं कुर्वन् आगच्छतु, त्वाम् अलङ्करिष्यामि। खादनाय पदार्थान् प्रदास्यामीति कथयन्ति। तावदेव दीनाः भूत्वा दयावृष्ट्यर्थम् आध्यात्मिकभावनया च भगवन्तं श्रीनिवासं स्तुतवन्तः।

(आनन्दभैरवी)

**श्रीनिवास नीने पालिसो। श्रितजनपाल।**
**गानलोल श्रीमुकुंदने।**
**ध्यानमाळ्प सज्जनर मानदिं परिपालिप**
**वेणुगोपाल गोविंद वेदवेद्य नित्यानंद।।**

हे श्रीनिवास! त्वमेव मां रक्षस्व। त्वं ध्यानं कुर्वतां सज्जनानाम् अभिमानं रक्ष्यमाणः वेणुगोपलः गोविन्दः वेदवेद्यः नित्यानन्दश्च भवसि।

(अवशिष्टम् अग्रिमसञ्चिकायाम्)



# कर्मणा ख्यातिमाप्नोति

- कुमारी युदुश्री के.पि.
चरवाणी - ९४४६५९३२८३

महाभारतकर्ता व्यासदेवः सर्वेषां सुपरिचित एव। तस्य शुकदेवनामकः पुत्रः आसीत्। स तु सूक्ष्मबुद्धिः शास्त्रपठने अतीव तत्परश्चासीत्। एकस्मिन् दिने व्यसदेवः शुकदेवं आहूय एवमवोचत्, पुत्र! अस्माकं देशे जनकनामकः एकः प्रसिद्धः राजा अस्ति। सः न केवलं तस्य नेतृपाटवेन अपि तु पाण्डित्येनापि प्रसिद्धः। इतोऽपि त्वयि ज्ञानाभिवृद्धिः भवतु इति मम अभिलाषः। अतः त्वमिदानीमेव जनकं प्रति गत्वा तस्य शिष्यत्वं स्वीकुरु। तत् भवतः विवेकप्राप्त्यर्थं बहुधा उपकाराय भवति। यद्यपि शुकदेवस्य ज्ञानाभिवर्धने उत्साहः आसीत्, परन्तु जनकस्य पाण्डित्यविषये तावान् विश्वासः नासीत्। तथापि पितुः वचनमनुसृत्य सः जनकसविधं जगाम।

व्यासवचनं शुकदेवात् निशम्य ससन्तोषं जनकः तं शिष्यत्वेन स्वीकृतवान्। तस्मिन्नवसरे शुकदेवः जनकं पप्रच्छ। गुरुदेव! राजपदमलङ्कृत्य समस्तैश्वर्येण सपत्नीकः सन् लौकिकानन्दिते लोके आध्यात्मिकपथि स्थिरप्रज्ञो भूत्वा भवान् कथं जीवति इत्यत्र मम महान् सन्देहः वर्तते इति। शुकदेवस्य प्रश्नस्य अग्रे समाधानं दास्यामीत्युक्त्वा जनकः वदति, इदानीमहं भवतः कृते एकां परीक्षां विधास्यामि। एवमुक्त्वा तैलपूरितमेकं पात्रं शुकदेवस्य हस्ते दत्वा जनकः उक्तवान्, इदं पात्रं शिरसि निधाय अस्मिन् राजगृहे यावन्तः प्रकोष्ठाः सन्ति तेषु सर्वेषु सम्यक् निरीक्षणं कृत्वा आगच्छतु। आगमनात्परं मम प्रश्नाः सर्वेऽपि समाधेयाः। किञ्च प्रत्यागमनपर्यन्तं पात्रात् तैलस्य एकबिन्दुरपि अधः न पतेत्।

गुरोः पीरक्षां शुकदेवः बहु सुष्ठु कृतवान्। जनकः बहुधा प्रश्नान् कृतवान् तत्र सर्वत्रापि सः समाधानानि प्रदत्तवान्। जनकः सन्तुष्टो जातः। पुनः जनकः तं पृच्छति, निरीक्षणेन सह कथं पात्रस्थतैले श्रद्धा दत्तवान् इति। शुकदेवः उक्तवान्, अहं प्रकोष्ठेषु श्रद्धया सह निरीक्षणं कृतवान् परन्तु तैलस्य अधःपतनं मास्तु इति मम लक्ष्यबोधः आसीत् मनसि इति। शुकदेवस्य उत्तरं श्रुत्वा जनकः वदति, इदानीं भवान् यदुक्तवान् तत्रैव भवता पूर्वं कृतस्य प्रश्नस्य समाधानमस्ति। पुनः जनकः वदति, एवमेव अहमपि राजा-पतिः-पिता इत्येवं यत् लौकिकजगति मया अनुष्ठेयव्यकर्तव्यानि सन्ति तानि सर्वाण्यपि विधिवत् कृत्वा तेन सह कर्माणि तथा आध्यात्मिकपथि अपि श्रद्धालुः भूत्वा अग्रेस्सरन्नस्मि इति। जनकस्य वचनात् सन्तुष्टः शुकदेवः तस्य शुश्रुषादिकं सम्यगकरोत्।

नीतिः - लौकिकेऽलौकिकेवापि तुल्यदृष्टिर्भवेत् स यः।
तदैव ख्यातिमाप्नोति हितेन स्वेन कर्मणा।

चित्रकथा

# सार्थकजीवनाय किं कार्यम्


तेलुगु मूलम् - चित्राणि
- तुम्बलि शिवाजी
संस्कृतानुवादः - श्री. जोषि भारद्वाजः


































































अग्रिमसंचिकायां श्रीवेङ्कटेशस्य दिव्यलीलाविलासान्तरं दृष्ट्वा धन्याः भवेम...

# रसप्रश्नाः

१. दशरथस्य राजवंश कः?
अ. इक्ष्वाकुवंशः आ. चन्द्रवंशः
इ. नागवंश ई. हरिवंशः

२. पुत्रप्राप्त्यर्थं दशरथेन अनुष्ठितस्य यागस्य नाम किम्?
अ. अश्वमेधम् आ.राजसूयम्
इ. पुत्रकामेष्टिः ई. अग्निष्टोमम्

३. गरुडः कस्य वाहनः?
अ. शिवस्य आ. महाविष्णोः
इ. गणेशस्य ई. कार्त्तिकेयस्य

४. शृङ्गी कस्य पुत्रः?
अ. गौतमस्य आ. अगस्त्यस्य
इ. शमीकस्य ई. हारीतस्य

५. जनमेजयस्य पिता कः?
अ. अर्जुनः आ. परीक्षित्
इ. अभिमन्यु ई. शन्तनुः

६. भीष्मस्य पिता कः?
अ. चित्रसेनः आ. विचित्रवीर्यः
इ. शन्तनुः ई. शूरसेनः

७. राधेयः इति प्रसिद्धः कः?
अ.अर्जुनः आ.कर्णः
इ. भीमः ई. युधिष्ठिरः

८. एकलव्यस्य पितुः नाम किम्?
अ. सुदर्शनः आ.हिरण्यनाभः
इ. हिरण्यधनुः ई. शङ्खचूडः

९. गुडाकेशः इति कस्य नाम?
अ.युधिष्ठिरस्य आ.अर्जुनस्य
इ. कर्णस्य ई. भीमसेनस्य

१०. दारुकः कस्य सारथिः आसीत्?
अ.अर्जुनस्य आ.भीष्मस्य
इ. युधिष्ठिरस्य ई. श्रीकृष्णस्य

समाधानानि - १.अ २. इ ३. आ ४. इ ५.आ ६. इ ७. आ ८. इ ९. आ १०. ई

## चित्रलेखनम्

अस्य चित्रपटस्य रञ्जनं कुर्मः वा?



प्रदत्तं चित्रपटम् अधोनिर्दिष्टप्रदेशे स्थापयामो वा?





महाक्रतुर्महायज्वा महायज्ञो महाहविः।



Edited and Published on behalf of T.T.Devasthanams by Prof. K.Rajagopalan, Ph.D., Chief Editor, T.T.D., and Printed at T.T.D.Press by Sri. P.Ramaraju, M.A., Special Officer., (Press & Publication), T.T.D. Press, Tirupati - 517 507.



२१-०४-२०२१ दिनाङ्के हनुमतः जन्मस्थानं तिरुमलक्षेत्रमेव इति तिरुमलतिरुपतिदेवस्थानेन प्रकटितसन्दर्भे...



१३-०४-२०२१ दिनाङ्के महति कलाक्षेत्रे (तिरुपति) ति.ति.दे पक्षतः आचरितानां प्लवनामसंवत्सरस्य युगाद्युत्सवानां दृश्यम्।



१८-०४-२०२१ दिनाङ्के श्रीरामानुजाचार्याणां १००५ तमावतारमहोत्सवं पुरस्कृत्य तिरुमल श्रीपेद्दजीयर् मठे आचरितस्य श्रीरामानुजनूट्रन्दादि दिव्यप्रबन्धपारायणमहोत्सवस्य दृश्यम्।



१३-०४-२०२१ दिनाङ्के तिरुमले श्रीनिवासस्यालये युगाद्यास्थानानन्तरं श्रीवैखानसागमशास्त्रग्रन्थानामाविष्कारदृश्यम्।



०१-०५-२०२१ दिनाङ्के तिरुमले पारिशुद्ध्यकर्मचरेभ्यः आरोग्यरक्षणपेटिकानां वितरणे ति.ति.दे. पालनमण्डल्यध्यक्षाः श्री वै.वि.सुब्बारेड्डि महोदयाः।

